BIBLIOTHECA INDICA:

A

# COLLECTION OF ORIENTAL WORKS

PUBLISHED BY THE
ASIATIC SOCIETY OF BENGAL
NEW SERIES, No 1316

## ॥ शतपथब्राह्मणम् ॥

॥ सायणाचार्यकृतवेदार्थप्रकाशाख्यभाष्यसहितम् ॥

## THE ÇATAPATHA BRĀHMANA

OF THE WHITE YAJURVEDA,

WITH THE

COMMENTAY OF SAYANACHARYA.




EDITED BY
LATE ĀCHARYA SATYAVRATA SAMASRAMIS
son and pupil
PROF HITAVRATA SAMAKANTHA
*Assistant Lecturer, Vedas The University of Calcutta*

VOL IX FASC II.

CALCUTTA:
PRINTED BY S V CHATTERJI, SATYA PRESS 16/1, GHOSE LANE.
AND PUBLISHED BY THE
ASIATIC SOCIETY 1, PARK STREET,
1912

27647

स वै पञ्चगृहीतं गृह्णीते। पञ्चधाविहितो वा ऽअयꣳ शीर्षन् प्राणो मनो वाक् प्राणश्चक्षुः श्रोत्रं यमेत मेवास्मिन्नेतत् पञ्चधाविहितꣳ शीर्षन् प्राणं दधात्यग्निस्तिग्मेन शोचिषेति तिग्मवत्या शिर ऽएवास्यैतया सꣳश्यति तिग्मतायै ॥ ५ ॥

अथ षोडशगृहीतं गृह्णीते। अष्टौ प्राणा अष्टावङ्गान्येता मभि सम्पदꣳ समान्याꣳ स्रुचि गृह्णीते समाने ह्येवात्मन्नङ्गानि च प्राणाश्च भवन्ति नाना जुहोत्यङ्गेभ्यश्च तत्प्राणेभ्यश्च व्यावृतिं करोति वैश्वकर्मणाभ्यां जुहोति विश्वकर्मायमग्निस्त मेवैतत् संस्करोति विश्व ऽआहुतिर्जुहोति विहृदग्नि-र्यावानग्निर्यावत्यस्य मात्रा तावतैवैन मेतदन्नेन संस्करोति सप्तदशभिर्ऋग्भिः सप्तदशः प्रजापतिः प्रजापतिरग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैन मेतत् संस्करोत्येकविꣳशतिगृहीतेन द्वादश मासाः पञ्चर्तवस्त्रय ऽइमे लोका ऽअसावादित्य ऽएकविꣳश ऽएता मभिसम्पदम् ॥ ६ ॥

यद्देवैताः समिध ऽआदधाति । एतद्वा ऽएनं देवाः सर्व्वं कृत्स्नꣳ संस्कृत्यायैन मेतेनान्नेनाप्रीणन्नेताभिः समिद्भिस्तथैवैन मय मेतत् सर्व्वं कृत्स्नꣳ संस्कृत्यायैन मेतेनान्नेन प्रीणात्येताभिः समिद्भिरौदुम्बर्यो भवन्त्यार्द्रा घृते न्युक्ता सर्व्वाꣳ रात्रिं व्यसन्ति तस्योक्तो बन्धुरुदेन मुत्तरां नयेन्द्रेमं प्रतरां नय यस्य कुर्म्मो गृहे हविरिति यथैव* यजुस्तथा बन्धुस्तिस्रः समिध ऽआदधाति त्रिवृदग्नि र्यावानग्निर्यावत्यस्य मात्रा तावतैवैन मेतदन्नेन प्रीणाति तिस्र ऽआहुतीर्जुहोतीति तत् षट् तस्योक्तो बन्धुः ॥ ७ ॥ १ ॥

॥ इति प्रथमप्रपाठके चतुर्थं ब्राह्मणम् [२. २.]

प्रवर्ग्योद्वासनानन्तरं सञ्चिते इष्टकासमूहे स्थापनायाग्निं प्रणेतुं तावद्गार्हपत्ये आज्यहोमं समिद्धोमं च विधत्ते— "प्रत्येत्वाग्नि मिति । प्रहरिष्यन् प्रणेष्यन्नित्यर्थः । विहित

* 'यथा यजुस्तथा'—इति ग, ख ।

होम आहवनीयप्रदेशं समिद्धस्याग्नेः * अपनाय पुरस्तादेवेन † सम्पादयत इत्याह एतद्वा एन मित्यादिना आहुतिभिः समिद्भिरित्येतदनेनेत्यस्य विशेषणं आहुति समिद्रूपेणे नेनेत्यर्थः। आहुतिभि र्जुहोती सामान्येन विधानात् कथं होमप्रकार इत्यपेक्षया आह — "स वै पञ्च गृहीत मिति। आज्य पञ्चगृहीतं यथा भवति तथा गृह्णीतेत्यर्थः। तत्र तु "पञ्च वा ऋतव" ‡ इत्यादिकं ब्राह्मणं प्रागुक्तम्। अनेन पञ्चगृहीतेनाज्येनैकाहुतिं सम्पादयेत् ॥ १ ॥

अथ षोडशगृहीत माज्यं गृह्णाति, अष्टौ प्राणा अष्टावङ्गानीत्येते: § षोडशावयवः प्रजापतिः अय च ह्रूयमानोऽग्निः प्रजापत्यात्मकः अतस्तस्य षोडशगृहीतेन मात्मसदृशं अन्नं न भवतीति तदुचितेनैवान्नेनैनं प्रीणाति। लोके हि यदेवान्न मात्मसंहितं तदेव रक्षति न च हिनस्ति भूयो हिंसकत्वादल्पस्य त्वपर्याप्तत्वेनारञ्जकत्वादिति। अत्र षोडश गृहीतं सर्वं विभज्य द्वे आहुती क्रियते। अतयाहुतिभेदेन पृथगेव ग्रहणप्रसक्तावाह,— "समान्या मिति। समान्या मेकस्या मेव स्रुचि गृह्णीत-

---

* 'समिध्यासाग्नेः'—इति क, 'समिध्यमाने,'—इति ग, 'समिध्यातान्येः'—इति भ ष।

† पुरस्तादन्वेन'—इति क भ ष।

‡ द्रष्टव्य पुरस्तात् ८ ४ १।

§ अष्टावङ्गानीयेमे'—इति क, 'अष्टावङ्गानीमि'—इति ग।

षोडशगृहीत माज्यं सहैव गृह्णीयादित्यर्थः । आहुतिभेदेऽपि कथ मेकं गृह्णाति इत्यत आह— "समानो होति ।" एतेन षोडशगृहीतेनाज्येन यं प्रीणाति तस्याग्नेरैकत्वादित्यर्थः । प्रकृतेन षोडशगृहीतेनाज्येन साध्यौ द्वौ होमाविति दर्शयत् मन्त्रे वर्णिता देवता सम्बन्धस्याग्नये प्रकृतहोमे समवेतार्थ माह— "वैश्वकर्मणाभ्या मिति । वैश्वकर्मणशब्द उद्दिदादि धर्म्यंवत्कर्मनामधेयं अग्नेः प्राजापत्यात्मकत्वेन विश्व विषय-कर्मवत्वाद्विश्वकर्मत्वम् । पञ्चगृहीतेनाज्येनैकाहुतिः षोडश गृहीतेन द्वे आहुति इति । तिस्र आहुतयः सम्पद्यन्ते सा च त्रित्वसङ्ख्यासकलस्य अग्नेस्तृप्ति हेतु र्न भवतीत्याह,— "तिस्र आहुती र्जुहोति त्रिवृदग्नि रिति । आहुतीय जुहोति समिधं य दधातीति होमद्वय मपि सामान्येन विहितम् । तत्राज्याहुतीनां होमप्रकारोऽभिहितः ॥ २ ॥

अथ समिधां होमे विशेष मभिधातु माह— "अथ समिध इति ॥" यथा तर्पयस्वेति लोके जनः किञ्चित् पुरुष मन्येन तर्पयित्वा पश्चादन्नविशेषाणां परिवेषणं करोति तद्वदेवात्र अपि समिद्धोमो भवति । आज्याहुतिलक्षणस्यान्नस्य प्रथमं सम्पादितत्वादित्यर्थः । परिवेविष्यादित्यत्रापि यङ्लुगन्तस्य सिद्धि रूपं तत्र समिध औदुम्बर्यो भवेयु रित्याह— "औदुम्बर्य इति । उदुम्बरस्य ऊर्ग्रसात्मकत्वात्तेनैवैनं प्रीणातीत्याह— "ऊर्ग्वा इति । एतद्वै वनस्पतीना मित्यादिकस्याय मर्थः । आर्द्राः आर्द्रत्वं गुण इति यत् एतद्वनस्पतीना मार्द्रं मनुप्रहतं जीवं

भार्द्रतराणा मुपजीवत्वात्; पत भार्द्राभिः समिद्भि र्होमे तेन जीवेनैनं प्रीणाति। अग्नौ ह्रूयमानस्य घृतस्य समिदादिवद् भक्षो भावात्। केवलं ज्वालारूपेण परिणामादाने चपैर्व भतएव श्रूयते। एतद्वा अग्नेः प्रियं धाम यदाज्य मिति (ताः समिधः पूर्वेद्युरानी सर्वस्या मेव घृते वसन्ति। सर्वां रात्रिलीत्व-श्यमां योगे द्वितीया तत्तथा नियामे हि) * ताः रसेन सम्पन्ना भवन्तीति। भत स्वयाविधाभि समिद्भि र्होमे स्वकीयेन रसरूपेण तापनेन मग्निं प्रीणितवान् भवतीति। "समिध आदधातीति। सामान्येन बहुवविधाना. न्हिविपि पर्यवसान माह— "तिस्र इति। ताश्च त्रित्वसङ्ख्यां सकलाग्निप्रीतिहेतुत्वेन प्रशंसति ॥ ३ ॥

"यद्वैता इति। समस्कुर्वन्निति आहवनीयरूपतानुगुण-संस्कार विशिष्ट मकुर्वन्नित्यर्थः ॥ ४ ॥

तत्र प्रथमाहुत्यर्थं पञ्चकार यहणं अग्नेः शीर्षस्य प्राण-पञ्चको नमरूपेण प्रशंसति— "स वै पञ्च गृह्णीत मिति। वा-गिति वागिति मुखं प्राण इति प्राणं चक्षुर्द्वयं च द्वौ प्राणौ एते मनःसहितावागादयः शिरसि पञ्चविहितः प्राणः भतश्च पञ्चवार-ग्रहणेनाग्निमग्ने: शिरसि मनःप्रभृति प्राणपञ्चकं निदधाति। होममन्त्रस्य तिग्मपदसम्बन्धं प्रशंसति— भग्नेस्तिग्मेनेतिग्म-शब्दस्य तैक्ष्ण्यवाचकत्वात् तद्वत्या ऋचा होमेन तैक्ष्णसिद्ध-येग्नेः शिरस्तीक्ष्णं करोति पश्यन्तीति शो तनूकरणे भस्मा-द्धटिश्यतिर्नुतः श्यतीत्योकारलोपः। अथ तत्राहुति हयार्थं

* अयमंशीचिह्नान्तः प्रदर्शितः पाठो ज-पुस्तकमात्रे नास्ति।

षोडशधात्मग्रहणं प्रशंसति, ( अभिहान्यष्टावङ्गानि । एताषां सम्पद्गमभिनन्य षोडशगृहीतस्य ग्रहणं यस्मिन्नग्नौ प्राणाङ्ग-दृष्टं सम्पादनार्थं षोडशवारं गृहीत इत्यर्थः । एकस्मिन्नेव शरीरे अङ्गानां प्राणानाञ्चावस्थानात् षोडशगृहीत मेवस्तु विगृहीते * ) होमस्तु पृथगेव करोति । एवं च अङ्गानां प्राणानाञ्च विधृतिं विभेदेन धारणं समहोमेनैतां करोति । तयो र्होमयो र्यज्ञकर्मण्यत्वादिग्नकर्मशब्दाभिधेय मग्निं संस्करोति । आहुतीनाञ्च वित्वाविश्वतीभिः सकलस्यापि संस्कारं सम्पादयति । अथाग्निस्तिग्मेनेत्यनया ऋचा पञ्चगृहीतं हूयते य इमा विश्वेत्यादिभिरष्टाभिर्ऋग्भिः षोडश गृहीतार्द्धं हूयते अवशिष्टं चक्षुषः पितेत्यादिभिरष्टाभि † हूयते । अतएव कात्यायनः ;— "पञ्च गृहीतं जुहोत्यग्निस्तिग्मेनेत्यृचा षोडशगृहीतार्द्धं मनुवाकशेषेण" "चक्षुषः पितेत्य परमनु वाकेना"— इति ‡ । एवं सर्वाः सम्भूय सप्तदश भवन्ति ता एतान् सप्तदशाग्निसंस्कारहेतुत्वेन प्रशंसति,— "सप्तदशभि ऋग्भिरिति । प्रजापतेः सप्तदशत्वं तैत्तिरीयके श्रुतम्,—"आश्रावयेति चतुरक्षर मस्तु श्रौषडिति चतुरक्षरं यजेति द्व्यक्षरं ये यजामहे इति पञ्चाक्षरं द्व्यक्षरो वषट्कार एष वै सप्तदशः प्रजापतिः"–इति § ।

---

* वन्धनीचिह्नान्तः प्रदर्शितः पाठो नास्ति ग-पुस्तकादन्यत्र ।

† "विश्वेत्यादिभिर्हूयते"—इति ग ।

‡ का० श्रौ० सू० १८ ३ १२-१४ ।

§ तै० ब्रा० १. ६. ११ ।

अथवा अष्टौ प्राणा अष्टावङ्गानि स्वय मेक इति सप्तदशात्मक मिलितां यङ्गसञ्ज्ञां प्रशसति,— "एकविंशति गृह्णोतिनैं तं। "द्वादश मासा पञ्चर्त्तव स्त्रय इमे लोका असावादित्य एकविंश' एता मभिलक्ष्य एकविंशति गृह्णोतिन इयते । एतस्याग्नेर्यथोक्तैकविंशात्मकत्व सम्पादनायैकविंशति गृहोतेन होम इत्यर्थ ॥ ६ ॥

अथ समिधां होम प्रकारान्तरेण प्रशसति,— "यद्वैवैता इति । अर्थ यथा तर्पयित्वा पाययित्वादिति आज्याहुतिलक्षणेनान्नेन तर्पितस्याग्ने समिद्धोम परिवेषणवद्भवतीति प्रशंसित । इदानीन्तु एकविंशति गृहोत होमेन एकविंशत्यात्मकत्व सम्पादनात् कात्स्न्येन सस्कृतस्याग्नेरन्नरूपेण प्रशस्यत इति न पौनरुक्त्यम् । सर्वमित्यस्यैवार्थ कथन कृत्स्न मिति "औदुम्बर्यो भवन्त्यार्द्रा घृते न्युप्ता सर्वा रात्रि वसन्ति"–इति यदस्ति तस्य अर्थो उदुम्बर इत्यादिरूप ब्राह्मण मनन्तर मेवोक्त तदेवानुसन्धेयेत्यर्थ । प्रकृताना समिदाहुतीनां मन्त्रा निगदव्याख्याता इत्याह—'उदेन मुत्तरान्नयेति *। "उदेन मुत्तरान्नयेत्यादिक प्रथमो मन्त्र, "इन्द्रेम प्रतरान्नयेत्यादिको द्वितीय † "यस्य कुर्मो गृहे हविरित्यादिक स्तृतीय ‡, एतेषां यथा मन्त्रस्य तथैव ब्राह्मण स्पष्टार्थो इत्यर्थ । "तिस्र समिध' इत्येत

* वा० सं० १७ ५० ।
† वा० सं० १७ ५१ ।
‡ वा० सं० १७ ५२ ।

दुक्तार्थं माज्यसमिदाहुति सङ्ख्यां भूयः स्तौति— "तिस्र आहुति रिति। प्रकृतत्वात्तिस्र. समिध आदधातीति सम्बध्यते, एवं षट् सङ्ख्यां सम्पद्यन्ते तद्ब्राह्मणं–"षड् वा ऋतव" इत्यादि-रूपं प्रागुक्त मित्यर्थः * ॥ ७ ॥ ३ [ २. २. ] ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथब्राह्मणभाष्ये
नवमकाण्डे द्वितीयाध्याये द्वितीयं ब्राह्मणम् ॥

॥ इति नवमकाण्डे प्रथमः प्रपाठकः समाप्तः ॥

---

* पुरस्तात् ८ । ५ । १ ।

अथ

द्वितीयप्रपाठके प्रथमं ब्राह्मणम्,

अपि वा

द्वितीयाध्याये तृतीयं ब्राह्मणम्।

---

॥ हरिः ॐ ॥

अथातः सम्प्रैष्यति। उद्गच्छेममुपयच्छोपयमनीरग्नये प्रक्रियमाणायानुब्रूह्यग्नीदेकस्फ्ययानुद्धर्* ब्रह्मन्प्रतिरथं जपेति ॥ १ ॥

एतद्वै देवासुपप्रैष्यत। एतं यज्ञं तᳫस्यमानान् दक्षिणतोऽसुरा रक्षाᳫसि नाष्ट्रा अभिघाᳫसन्न यक्ष्यध्वे न यज्ञं तᳫस्यध्व इति ॥ २ ॥

ते देवा इन्द्र मब्रुवन्। त्वं वै नः श्रेष्ठो बलिष्ठो वीर्यवत्तमोऽसि त्व मिमानि रक्षाᳫसि प्रतियतस्वेति तस्य वै मे ब्रह्म द्वितीय मस्त्विति

---

* 'स्फ्ययानुद्धर'—इति क, ख, ग।

तथेति तस्मै वै बृहस्पतिं द्वितीय मकुर्व्वन् ब्रह्म वै बृहस्पतिस्त ऽइन्द्रेण चैव बृहस्पतिना च दक्षिणतो ऽसुरान् रक्षाꣳसि नाष्ट्रा अपहत्याभये ऽनाष्ट्र ऽएतं यज्ञ मतन्वत ॥ ३ ॥

तद्वा ऽएतत् क्रियते। यद्देवा अकुर्व्वन्निदं नु तानि रक्षाꣳसि देवैरेवापहतानि यत्त्वेतत् करोति यद्देवा ऽअकुर्व्वंस्तत्करवाणीत्यथो ऽइन्द्रेण चैवैतद् बृहस्पतिना च दक्षिणतो ऽसुरान् रक्षाꣳसि नाष्ट्रा ऽअपहत्याभये ऽनाष्ट्र ऽएतं यज्ञं तनुते ॥ ४ ॥

स यः स इन्द्रः। एष सो ऽप्रतिरथो ऽथ यः स बृहस्पतिरेष स ब्रह्मा तद्यद्ब्रह्मा प्रतिरथं जपतीन्द्रेण चैवैतद् बृहस्पतिना च दक्षिणतो ऽसुरान् रक्षाꣳसि नाष्ट्रा अपहत्याभये ऽनाष्ट्र ऽएतं यज्ञं तनुते॥ तस्माद् ब्रह्माप्रतिरथं जपति * ॥ ५ ॥

आशुः शिशानो वृषभो न भीम इति† । ऐन्द्र्यो ऽभिरूपा द्वादश भवन्ति द्वादश मासाः

* 'जपति'—इति क।  † 'इति'—इति क, ख।

संव्वत्सरः संव्वत्सरो ऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैतद्दक्षिणतो ऽसुरान् रक्षाᳪसि नाष्ट्रा अपहन्ति त्रिष्टुब्भिर्व्वज्रो * वै त्रिष्टुब्वज्रेणैवैतद्दक्षिणतो ऽसुरान् रक्षाᳪसि नाष्ट्रा अपहन्ति ता द्वाविᳪशति-र्गायत्र्यः सम्पद्यन्ते तदाग्नेय्यो भवन्त्यग्निकर्म्म हि † ॥ ६ ॥

अथैन मुद्यच्छति ‡ । उदु त्वा विश्वे देवा अग्ने भरन्तु चित्तिभिरिति तस्योक्तो बन्धुः § ॥ ७ ॥

अथाभिप्रयन्ति । पञ्च दिशो दैवीर्य्यज्ञ मवन्तु देवीरिति देवाश्चासुराश्चोभये प्राजापत्या दिक्ष्व-स्पर्द्धन्त ते देवा असुराणां दिशो ऽवृञ्जत तथै-वैतद्यजमानो द्विषतो भ्रातृव्यस्य दिशो वृङ्क्ते दैवीरिति तद्देना दैवीः कुरुते ‖ यज्ञ मवन्तु दैवी-

---

* 'त्रिष्टुभिर्व्वज्रो'—इति क ख ।

† हि'—इति ख, 'हि'—इति ग, घ ।

‡ 'मुद्यच्छति'—इति क ।

§ 'बन्धुः'—इति ङ ।

‖ 'कुरुते'—इति ग ।

रिति यज्ञ मिम मवन्तु देवीरित्येतद्दपामतिं दुर्मतिं बाधमाना इत्यशनाया वा ऽअमतिरशनाया मप-बाधमाना इत्येतद्रायस्पोषे यज्ञपतिं माभजन्तीरिति रय्यां च पोषे च यज्ञपतिं माभजन्तीरित्येतद्रायस्पोषे ऽअधि यज्ञो ऽअस्थादिति रय्यां च पोषे चाधि यज्ञो ऽस्थादित्येतत् * ॥ ८ ॥

समिद्धे ऽअग्नावधि मामहान इति। यजमानो वै मामहान उक्थपत्र इत्युक्थानि ह्येतस्य पत्राणीड्य इति यज्ञियं इत्येतद्गृभीत इति धारित इत्येतत्तप्तं घर्मं परिगृह्यायजन्तेति तप्तए ह्येतं घर्मं परिगृह्यायजन्तोर्जा यदाज्ञ मयजन्त देवा इत्यूर्जा ह्येतं यज्ञ मयजन्त देवाः † ॥ ९ ॥

दैव्याय धर्त्रे जोष्ट्र ऽइति। दैवो ह्येष धर्ता जोषयितृतमो देवश्रीः श्रीमनाः शतपया इति देवश्रीर्ह्येष श्रीमनाः शतपयाः परिगृह्य देवा यज्ञमायन्निति परिगृह्य ह्येतं देवा यज्ञमायन् देवा

* 'ऽस्थादित्येतत्'—इति ग, घ।

† 'देवाः'—इति ग, घ।

देवेभ्यो ऽअअयन्तो अस्वरित्यध्वरो वै यज्ञो देवा देवेभ्यो यज्ञियन्तो ऽस्वुरित्येतत् ॥ १० ॥

व्वीतᳪ हविः शमितᳪ शमिता यजध्या ऽइति। इष्टᳪ स्विष्ट मित्येतत्तुरीयो यज्ञो यत्र हव्यमेतीत्यध्वर्युः पुरस्ताद्यजूᳪष्यपि जपति होता पश्चादृचो ऽन्वाह ब्रह्मा दक्षिणतो ऽप्रतिरथं जपत्येष ऽएव तुरीयो यज्ञस्ततो व्वाका आशिषो नो जुषन्ता मिति ततो नो व्वाकाश्चाशिषश्च जुषन्ता मित्येतत् * ॥ ११ ॥

सूर्य्यरश्मिर्हरिकेशः पुरस्तात्। सविता ज्योतिरुदयां† अजस्र मित्यसौ वा ऽआदित्य एषोऽग्निः स ऽएष सूर्य्यरश्मिर्हरिकेशः पुरस्तात् सवितैतज्ज्योतिरुद्यच्छत्यजस्रं तस्य पूषा प्रसवे याति व्विद्वानिति पशवो वै पूषा त ऽएतस्य प्रसवे प्रेरते सम्पश्यन् विश्वा भुवनानि गोपा इत्येष वा ऽइदᳪ

---

* 'मित्येतत'—इति ग, घ।

† 'ज्योतिरुदयांश्च'—इति क, 'ज्योतिरुदयांश्'—लि ख 'ज्योतिरुदयांश्च'—इति ङ।

सर्व्वꣳ सम्पश्यत्येष ऽउ ऽएवास्य सर्व्वस्य भुवनस्य गोप्ता * ॥ १२ ॥

तद्या अमुष्मादादित्यादर्व्वाच्यः पञ्च दिशः । ता ऽएतद्देवा ऽअसुरगणा महद्भुतायो ता ऽएवैतत् समारोहंस्ता ऽउ ऽएवैतद्यजमानो द्विषतो भ्रातृव्यस्य वृङ्क्तेऽयो ता ऽएवैतत् समारोहत्ययो ऽएतद्वा ऽएताभिर्द्देवा आतः सम्प्रापुवंस्तथैवाभिरय मेतद्यातः सम्प्राप्नोति † ॥ १३ ॥

अथाश्मानं पृश्निमुपदधाति । असौ वा ऽआदित्यो ऽश्मा पृश्निरमु मेवैतदादित्य मुपदधाति पृश्निर्भवति रश्मिभिर्हि मण्डलं पृश्नि त मन्तरेणाहवनीयं च गार्हपत्यं चोपदधात्ययं वै लोको गार्हपत्यो द्यौराहवनीय ऽएतं तदिमौ लोकावन्तरेण दधाति ‡ तस्मादेष ऽइमौ लोकावन्तरेण तपति ॥ १४ ॥

---

* 'गोप्ता'—इति ग, 'गोप्ता'—इति घ।

† 'सम्प्राप्नोति'—इति क।

‡ 'दधाति'—इति क।

माग्नीध्रवेलायाम्। अन्तरिक्षं वा ऽआग्नीध्र मेतं तदन्तरिक्षे दधाति तस्मादेषो ऽन्तरिक्षाय-तनो व्यब्वे व्यब्वे ह्येष इतः * ॥ १५ ॥

स एष प्राणः। प्राण मेवैतदात्मन् धत्ते तदे-तदायुरायुरेवैतदात्मन् धत्ते तदेतदन्न मायुर्ह्येतदन्न मु वा ऽआयुरस्मा भवति स्थिरो वा ऽअस्मा स्थिर तदायुः कुरुते पृश्निर्भवति पृश्नीव ह्यन्नम् ॥ १६ ॥

स उपदधाति। विमान एष दिवो मध्य ऽआस्त ऽइति विमानो ह्येष दिवो मध्य ऽआस्त ऽआपप्रिवान्रोदसी अन्तरिक्ष मित्युदान् वा ऽएष ऽइमांल्लोकानापूरयति स विश्वाचीरभिचष्टे घृताची रिति स्रुचश्चैतद्वेदीश्चाहान्तरा पूर्व्वमपरं च केतु मित्य-न्तरेमञ्च लोक ममु ञ्चेत्येतदयो यच्चेद् मेतर्हि चीयते यच्चादः पूर्व्व मचीयतेति ॥ १७ ॥

उक्षा समुद्रो ऽअरुणः सुपर्ण ऽइति। उक्षा ह्येष समुद्रो ऽरुणः सुपर्णः पूर्व्वस्य योनिं पितुरा-विवेशेति पूर्व्वस्य ह्येष एतं योनिं पितुराविशति

* 'इतः'—इति ग, घ।

मध्ये दिवो निहितः पृश्निरश्मेति मध्ये ह्येष दिवो निहितः पृश्निरश्मा व्विचक्रमे रजसस्पात्यन्ताविति व्विक्रममाणो वा ऽएष ऽएषां लोकाना मन्तान्याति ॥ १८ ॥

द्वाभ्या मुपदधाति। द्विपाद्यजमानो यजमानो ऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैन मेतदुपदधाति विष्ठभ्यां* चैष्ठुभे ह्येष न सादयत्यसन्नो ह्येष न सूददोहसाधिवदति प्राणो वै सूददोहाः ऽप्राण ऽएष किं प्राणे प्राणं दध्यामिति त निधाय यथा न नश्येत् ॥ १९ ॥

अथोपायन्ति†। इन्द्रं व्विश्वा ऽअवीवृधन्निति तस्योक्तो बन्धुर्देवहूर्यज्ञ आ च व्वक्षत्सुम्नहूर्यज्ञ ऽआ च व्वक्षदिति देवहूश्चैव यज्ञः सुम्नहूश्च यत्तदग्निर्देवो देवांऽ॥ ऽआ च व्वक्षदिति यच्चैवाग्निर्देवो देवाना ह्व वहत्वित्येतत् ॥ २० ॥

---

* विष्टुभ्या—इति क, ख, ङ।

† 'अथोपायियन्ति'—इति क, ख, ङ।

‡ 'वहत्वित्येतत्'—इति ग, घ।

वाजस्य मा प्रसवः। उद्ग्राभेणोदग्रभीत्। अधा सपत्नानिन्द्रो मे निग्राभेणाधराँ२ अकरिति यथैव यजुस्तथा बन्धुः ॥ २१ ॥

उद्ग्राभं च निग्राभं च। ब्रह्म देवा अवीवृधन्। अधा सपत्नानिन्द्राग्नी मे विषूचीनान्व्यस्यतामिति यथैव यजुस्तथा बन्धुः ॥ २२ ॥

तद्वा अमुष्मादादित्यादूर्ध्वास्तिस्रो दिशः। ता एतद्देवा असुराणां सपत्नानामवृञ्जताथो ता एवैतत् समारोहंस्त उ एवैतद्यजमानो द्विषतो भ्रातृव्यस्य वृङ्क्तेऽथो ता एवैतत् समारोहत्यथो एतद्वा एताभिर्देवा अतः सम्प्राप्नुवंस्तथैवाभिरयमेतद्यजमानः सम्प्राप्नोति * ॥ २३ ॥

अथाग्निं मारोहन्ति। क्रमध्वमग्निना नाकमिति स्वर्गो वै लोको नाकः क्रमध्वमनेनाग्निनैतꣳ स्वर्गं लोकमित्येतदुख्यꣳ हस्तेषु बिभ्रत

---

* 'संप्राप्नोति'—इति क।

हृत्युष्यꣳ ह्येत ऽएतꣳ हस्तेषु बिभ्रति दिवस्पृष्ठꣳ स्वर्गत्वा मिश्रा देवेभिराध्व मिति दिवस्पृष्ठꣳ स्वर्गं लोकं गत्वा मिश्रा देवेभिराध्व मित्येतत्* ॥ ॥ २४ ॥

प्राची मनु प्रदिश प्रेहि विद्वानिति । प्राची वै दिगग्नेः स्वा मनु प्रदिश प्रेहि विद्वानित्येतदग्ने रग्ने पुरो ऽअग्निर्भवेहेत्यस्य त्व मग्नेरग्ने पुरो ऽग्नि† र्भवेहित्येतद्विश्वा आशा दीद्यानो विभाहीति सर्व्वा आशा दीप्यमानो विभाहीत्येतदूर्ज्जं नो धेहि द्विपदे चतुष्पद ऽइत्याशिष माशास्ते ॥ २५ ॥

पृथिव्या ऽअहम्‡ । उदन्तरिक्ष माऽरुह मन्तरिक्षा-द्दिव माऽरुह मिति गार्हपत्यादाग्नीध्रीय मागच्छ-त्याग्नीध्रीयादाहवनीयं दिवो नाकस्य पृष्ठात्स्वर्ज्योति-

---

* 'मित्येतत्'—इति ग, घ ।

† 'पुरो अग्नि'—इति क, 'पुरोग्नि'—इति ख घ ।

‡ 'पृथिव्याहम्'—इति क, पृथिव्या ऽअहम्'—इति ख, ङ, 'पृथिव्या अहम्'—इति ग ।

रगामह मिति दिवो नाकस्य पृष्ठात्स्वर्गं लोकमगामह मित्येतत् * ॥ २६ ॥

स्वर्यन्तो नापेक्षन्ते। आ द्याꣳ रोहन्ति रोदसी ऽइति न हैव ते ऽपेक्षन्ते ये स्वर्गं लोकं यन्ति यज्ञं ये विश्वतोधारꣳ सुविद्वाꣳसो वितेनिर ऽइत्येष एव यज्ञो विश्वतोधार एत ऽउ ऽएव सुविद्वाꣳसो य ऽएतं वितन्वते † ॥ २७ ॥

अग्ने प्रेहि प्रथमो देवयता मिति। इम मेतदग्नि माह त्व मेषां प्रेहि प्रथमो देवयता मिति चक्षुर्देवाना मुत मर्त्याना मित्युभयेषाꣳ ह्येतद्देवमनुष्याणां चक्षुरियक्षमाणा भृगुभिः सजोषा इति यजमाना भृगुभिः सजोषा इत्येतत्स्वर्यन्तु यजमानाः स्वस्तीति स्वर्गं लोकं यन्तु यजमानाः स्वस्तीत्येतत् ‡ ॥ ॥ २८ ॥

तद्या अमुष्मिंल्लोके पञ्च दिशः। ता एतद्देवा

* 'मित्यैतत्'—इति ग, 'मित्येतत्'—इति घ।

† 'वितन्वते'—इति ग, 'वितन्वते'—इति घ।

‡ 'स्वस्तीत्यैतत्'—इति ग, घ।

ऽसुराणा मसञ्ज्ञाताथो ता एवैतत् समारोहंस्त उ ऽएवैतद्यजमानो द्विषतो भ्रातृव्यस्य वृङ्क्ते ऽथो ता एवैतत् समारोहत्यथो ऽएतद्वा ऽएताभिर्देवा आप्तः सम्प्राप्नुवंस्तथैवैताभिरय मेतदाप्तः सम्प्राप्नोति* ॥ २९ ॥

अथैन मभिजुहोति । एतद्वा ऽएनं देवा ईयिवांस मुपरिष्टादन्नेनाप्रीणन्नेतयाहुत्या तथैवैन मय मेतदीयिवांस मुपरिष्टादन्नेन प्रीणात्येतयाहुत्या कृष्णायै शुक्लवत्सायै पयसा रात्रिर्वै कृष्णा शुक्लवत्सा तस्या असावादित्यो वत्सः स्वेनैवैन मेतद्भागेन स्वेन रसेन प्रीणात्युपरि धार्य्यमाण उपरि धार्य्यमाण उपरि हि स य मेतत् प्रीणाति दोहनेन हि पयः प्रदीयते ॥ ३० ॥

यद्वेवैन मभिजुहोति । शिर एतद्यज्ञस्य यदग्निः प्राणः पयः शीर्षंस्तत् प्राणं दधाति यथा स्वयमातृण्णा मभिप्रचरेदेव मभिजुहुयात् प्राणः स्वयमातृण्णा रस एष शिरश्च तत् प्राणश्च रसेन सन्तनोति

---

* 'सम्प्राप्नोति'—इति ख ।

सन्दधाति नक्तोषासा समनसा विरूपे ऽइति तस्योक्तो बन्धुः ॥ ३१ ॥

अग्ने सहस्राक्षेति। हिरण्यशकलैर्वा ऽएष सहस्राक्षः शत मूर्द्धन्निति यदद्‌ः शतशीर्षा रुद्रो ऽसृज्यत शतं ते प्राणाः सहस्रं व्याना इति शतᳪ हैव तस्य प्राणाः सहस्रं व्याना यः शतशीर्षा त्वᳪ साहस्रस्य राय ईशिषऽ इति त्वᳪ सर्व्वस्य रय्या ऽईशिष ऽइत्येतत्तस्मै ते विधेम वाजाय स्वाहेत्येष वै वाजस्तमेतत् प्रीणाति ॥ ३२ ॥

द्वाभ्यां मभिजुहोति। द्विपाद्यजमानो यज-मानो ऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैन मेतदभिजुहोति * ॥ ३३ ॥

अथैनं निदधाति। सुपर्णोऽसि गरुत्मानित्ये-तद्वा ऽएन मदो विकृत्या सुपर्णं गरुत्मन्तं विक-रोति तᳪ सुपर्णं गरुत्मन्तं चिनोति तᳪ सुपर्णं गरुत्मन्तं कृत्वान्ततो निदधाति पृष्ठे पृथिव्याः

---

* 'मेतदभिजुहोति'—इति ख।

सीद भासान्तरिक्ष मापृण ज्योतिषा दिव मुत्तभान तेजसा दिश उद्दृ॰ह्येवृ॰ ह्येष एतत् सर्व्वं करोति*॥ ॥ ३४ ॥

आजुह्वानः सुप्रतीकः पुरस्तादिति । आजुह्वानो नः सुप्रतीकः पुरस्तादित्येतदग्ने स्वं योनि मासीद साधुयेत्येष वा ऽअस्य स्वो योनिस्तृ॰ साध्वासीदेत्येतदस्मिन्त्सधस्थे ऽअध्युत्तरस्मिन्निति द्यौर्व्वा ऽउत्तरृ॰ सधस्थं विश्वे देवा यजमानश्च सीदतेति तद्विश्वैर्देवैः सह यजमानृ॰ सादयति द्वाभ्यां निदधाति तस्योक्तो बन्धुर्व्वषट्कारेण तस्योपरि बन्धुः ॥ ३५ ॥

अथास्मिन्त्समिध आदधाति । एतद्वा ऽएनं देवा ईयिवाृ॰स मुपरिष्टादन्नेनाप्रीणन्त्समिद्भिराहुतिभिश्च तथैवैन मय मेतदीयिवाृ॰ समुपरिष्टादन्नेन प्रीणाति समिद्भिराहुतिभिश्च†॥ ३६ ॥

---

* 'करोति'—इति क ।

† 'आहुतिभिश्च'—इति क, ख ।

स वै शमीमयीं प्रथमा मादधाति। एतद्वा ऽएष एतस्या माहुत्याऽ हुतायां प्रादीप्यतोदज्वलत् तस्माद्देवा अबिभयुर्यद्वै नो ऽयं न हिंऽस्यादिति त ऽएताऽं शमी मपश्यंस्तयैन मशमयंस्तद्यदेतऽं शम्या-शमयंस्तस्माच्छमी तथैवैन मय मेतच्छम्या शमयति शान्त्या ऽएव न जग्ध्यै ॥ ३७ ॥

ताऽं सवितुर्व्वरेण्यस्य। चित्रा माहं वृणे सुमतिं विश्वजन्याम् या मस्य कण्वो ऽअदुहत् प्रपीनाऽं सहस्रधारां पयसा महीं गा मिति कण्वो हैनां ददर्श सा हास्मै सहस्रधारा सर्व्वान् कामान् दुदुहे तथैवैतद्यजमानाय सहस्रधारा सर्व्वान् कामान् दुदुहे * ॥ ३८ ॥

अथ वैकङ्कती मादधाति। तस्यां उक्तो बन्धु-र्व्विधेम ते परमे जन्मन्नग्न ऽइति द्यौर्व्वा ऽअस्य परमं जन्म व्विधेम स्तोमैरवरे सधस्थ इत्यन्तरिक्षं व्वा ऽअवरऽं सधस्थं यस्माद्योनेरुदारिथा यजे त

* 'दुदुहे' इति क ।

स वै शमीमयीं प्रथमा मादधाति। एतद्वा ऽएष एतस्या माहुत्याऽ हुतायां प्रादीप्यतोदज्वलत् तस्माद्देवा ऽअबिभयुर्यद्वै नो ऽयं न हिंऽस्यादिति त ऽएताऽ शमी मपश्यंस्तयैन मशमयंस्तद्यदेतऽ शम्या-शमयंस्तस्माच्छमी तथैवैन मय मेतच्छम्या शमयति शान्त्या ऽएव न जग्ध्यै ॥ ३७ ॥

ताऽ सवितुर्व्वरेण्यस्य। चित्रा माहं व्वृणे सुमतिं व्विश्वजन्याम्। या मस्य कण्वो ऽअदुहत् प्रपीनाऽ सहस्रधारां पयसा मही गा मिति कण्वो हैनां ददर्श सा हास्मै सहस्रधारा सर्व्वान् कामान् दुदुहे तथैवैतद्यजमानाय सहस्रधारा सर्व्वान् कामान् दुदुहे * ॥ ३८ ॥

अथ व्वैकङ्कती मादधाति। तस्या उक्तो बन्धु-र्व्विधेम ते परमे जन्मन्नग्न ऽइति द्यौर्व्वा ऽअस्य परमं जन्म व्विधेम स्तोमैरवरे सधस्थ ऽइत्यन्तरिक्षं व्वा ऽअवरऽ सधस्थं यस्माद्योनेरुदारिथा यजे त

* 'दुदुहे' इति क।

मित्येष वा ऽस्य स्वो योनिस्त्वं यज ऽइत्येतत्य*
स्वे हवींषि जुहुरे समिद्ध ऽइति यदा वा ऽएष
समिध्यते ऽथैतस्मिन् हवींषि प्रजुह्वति ॥ ३९ ॥

अथौदुम्बरी मादधाति। ऊर्ग्वै रस उदुम्बर
ऊर्ज्जैवेन मेतद्रसेन प्रीणाति कर्षकवती भवति
पशवो वै कर्षकाः पशुभिरेवैन मेतदन्नेन प्रीणाति
यदि कर्षकवतीं न विन्देद्दधिद्रप्स मुपहत्यादध्या-
द्यद्दधिद्रप्स उपतिष्ठते तदेव पशुरूपं मेषो ऽस्मे
दीदिहि पुरो न इति विराजादधात्यन्नं विरा-
डन्नेनैवैन मेतत् प्रीणाति तिस्रः समिध आदधाति
त्रिवृदग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैन मेत-
दन्नेन प्रीणाति † ॥ ४० ॥

अथाहुतीर्जुहोति। यथा परिविष्यानुपाययेत्
ता हैतत् स्रुवेण पूर्व्वां स्रुचोत्तरा मग्ने त मद्याश्वं न
स्तोमैः क्रतुं न भद्रं हृदिस्पृशम् ऋध्यामा त

* 'इत्येतत्य'—इति ग घ।
† 'प्रीणाति'- इति क।

ऽश्रोहैरिति यस्ते हृदिस्पृकस्तोमस्तं त ऽश्रध्यास-मित्येतत् पङ्क्त्या जुहोति पञ्चपदा पङ्क्तिः पञ्च-चितिको ऽग्निः पञ्च ऽर्त्तवः संवत्सरः संवत्सरो ऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैन मेतदन्नेन प्रीणाति * ॥ ४१ ॥

अथ वैश्वकर्मणीं जुहोति । विश्वकर्मायमग्निस्त मेवैतत् प्रीणाति चित्तिं जुहोमि मनसा घृतेनेति चित्त मेषां जुहोमि मनसा च घृतेन चेत्येतद्यथा देवा इहागमन्निति यथा देवा इहा-गच्छानित्येतद्वीतिहोत्रा ऋतावृध ऽइति सत्यवृध ऽइत्येतत्पत्ये विश्वस्य भूमनो जुहोमि विश्व-कर्मण ऽइति यो ऽस्य सर्व्वस्य भूतस्य पतिस्तस्मै जुहोमि विश्वकर्मण ऽइत्येतद्विश्वाहादाभ्यᳪ हवि-रिति सर्व्वदेवाचितᳪ हविरित्येतत् † ॥ ४२ ॥

---

* प्रीणाति – इति ख ।

† 'हविरित्येतत्'—इति ग, 'हविरित्येतत'—इति घ ।

अथ पूर्णाहुतिं जुहोति। सर्व्वं मेतद्यत् पूर्णं सर्व्वेणैवैन मेतत् प्रीणाति ॥ ४३ ॥

सप्त ते ऽअग्ने समिध इति। प्राणा वै समिधः प्राणा ह्येतं समिन्धते सप्त जिह्वा ऽइति यान्-मून्सप्त पुरुषानेकं पुरुष मकुर्व्वंस्तेषा मेतदाह सप्त ऽऋषय ऽइति सप्त हि त ऽऋषय आसन्सप्त धाम प्रियाणीति छन्दांस्येतदाह छन्दांसि वा ऽअस्य सप्त धाम प्रियाणि सप्त होत्राः सप्तधा त्वा यजन्तीति सप्त ह्येतं होत्राः सप्तधा यजन्ति सप्त योनीरिति चितीरेतदाहापृणस्वेत्या* प्रजायस्वे-त्येतद्घृतेनेति रेतो वै घृतं रेत ऽएवैतदेषु लोकेषु दधाति स्वाहेति यज्ञो वै स्वाहाकारो यज्ञिय मेवैतदिदं सकल् सर्व्वं करोति ॥ ४४ ॥

सप्त सप्तेति। सप्तचितिकोऽग्निः सप्त ऽर्त्तवः सम्वत्सरः सम्वत्सरो ऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैन मेतत् प्रीणाति तिस्र आहुतीर्जुहोति

* बिवारैतदाहापृणस्वा — इति ख।

त्रिष्टुबग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैन मेत-
दन्नेन प्रीणाति तिस्रः समिध ऽआदधाति तत्
षट् तस्योक्तो बन्धुः ॥ ४५ ॥

तिष्ठन्त्समिध ऽआदधाति* । अस्थीनि वै समिध-
स्तिष्ठन्तीव वा ऽअस्थीन्यासीन आहुतीर्जुहोति माꣳ-
सानि वा ऽआहुतय ऽआसत ऽइव वै माꣳसान्य-
न्तराः समिधो भवन्ति बाह्या ऽआहुतयो ऽन्तराणि
ह्यस्थीनि बाह्यानि माꣳसानि† ॥ ४६ ॥

अथातः सम्पदेव‡ । षट् पुरस्ताज्जुहोति षडु-
परिष्टात् षड्भिरात्मनः पृश्निर्यन्ति द्वाभ्यां मश्मानं
पृश्नि मुपदधाति चतुर्भिरग्नेर्यन्ति पञ्चभिरग्नि-
मारोहन्ति तदेका न त्रिꣳशदाहुतिरेव त्रिꣳशत्तमी
द्वाभ्यां मग्निं निदधाति तद् द्वात्रिꣳशद् द्वात्रिꣳशद-
क्षरानुष्टुप्सैषानुष्टुप् § ॥ ४७ ॥

* ऽज्यादधाति'—इति ख ।

† 'माꣳसानि—इति ग, माꣳसानि—इति ख, ङ,

‡ 'सम्पदेव'—इति ग घ ।

§ '०सैषानुष्टप—इति ग •सैषानुष्टुप—इति घ ।

तद्या ऽअमूस्तिस्रो ऽनुष्टुभः । गार्हपत्ये सम्पादयन्ति तासा मेता मचैका माहरन्ति तद्यदेता मवाहरन्त्यचैष सर्व्वो ऽग्निः संस्कृतः स ऽएषो ऽत्र तस्मै नान्न मासीद्यदन्न मात्स्यत् * ॥ ४८ ॥

सो ऽग्नि मब्रवीत् । त्वयान्न मदानीति तथेति तस्माद्यद्वैत मचाहरन्त्यथैषो ऽन्न मन्नाद्याल माहुतिभ्यो भवति † ॥ ४९ ॥

अथो ऽआहुः । प्रजापतिरेवैतं प्रियं पुत्र मुरस्याधत्त ऽइति स यो हैतदेवं व्वेद हैवं प्रियं पुत्र मुरसि धत्ते ॥ ५० ॥

यद्वेवैत मवाहरन्ति । यान्वै तान्त्सप्त पुरुषानेकं पुरुष मकुर्व्वन्नय मेव स यो ऽय मग्निश्चीयते ऽथ या मेषां ता मूर्द्धाए श्रियए रसए समुदौहन्नेष स य मेत मवाग्नि माहरन्ति तद्यदेत मचाहरन्ति यैवैतेषाए सप्तानां पुरुषाणाए श्रीर्या रसस्त मेत-

* 'मात्स्युत्'—इति ग, 'मात्स्यत्'—इति घ ।
† 'भवति'—इति क ।

दूर्वा स मुदूहन्ति तद्यैतच्छिर ऽत्मात्माय मग्नि- चित ऽत्मान मेवास्यैतत् संस्कृत्य शिरः प्रति- दधाति ॥ ५१ ॥ २ ॥

॥ इति द्वितीयप्रपाठके प्रथमं ब्राह्मणम् [२. ३.] ॥

इत्थ मग्निप्रणयनार्थं यथोक्तं होमं विधायाथ तत् प्रणीतौपयिकीः (?) * क्रियाः कर्तुं तदुचितं सम्प्रैष माह,— "अथातः समेष्यतीति । प्रणेष्यमाणाग्नि सिध्यर्थं गार्हपत्ये प्रचितं काश्मिर्यस्तदुद्यच्छ † अग्निधारणार्थं मधस्तात् क्रियमाणाः सिकता उपयमन्यः ताश्चोपयच्छेति ‡ एतदुभयं प्रतिप्रस्थातारम् . प्रत्युच्यते । हे होतः प्रणीयमानायाग्नये अनुब्रूहि अग्निप्रणयनीया ऋचोऽनुब्रूहि । हे अग्नीत् पराच्यास्तरेखया § अनुगच्छ ‖। हे ब्रह्मन् 'आशुः शिशान' इत्येतद-

* 'तस्मात्प्रायणोपर्यिकी:'—इति क, 'तन्मायणौपयिकी:'—इति ग,भ, 'तस्मात्प्रायणोपयिकी'—इति ण।
† 'काश्मिकातंदुद्यच्छ'—इति क, 'काश्मिकातंदुद्यच्छ'—इति भ, 'प्रचितां काश्मिकां तदुद्यच्छ—इति ण।
‡ 'ताश्चोभयच्छताः कुरुत'—इति ग-पुस्तके।
§ 'अर्ध्वरेखया (एकरेखया ?)'—इति क, भ।
‖ का० श्रौ० सू० १८ ३ १६।

तद्या ऽअमूस्तिस्रो ऽनुष्टुभः । गार्हपत्ये सम्पादयन्ति तासा मेता मचैका माहरन्ति तद्यदेता मवाहरन्त्यचैष सर्व्वो ऽग्निः संस्कृतः स ऽएषोऽत्र तस्मै नाल मासीदद्न्न मात्स्यत् * ॥ ४८ ॥

सो ऽग्नि मब्रवीत् । त्वयान्न मदानीति तथेति तस्माद्यदैवैत मचाहरन्त्यथैषो ऽल मन्नायाल माहुतिभ्यो भवति † ॥ ४९ ॥

अथो ऽचाहुः । प्रजापतिरेवैतं प्रियं पुत्र मुरस्याधत्त ऽइति स यो हैतदेवं व्वेदा हैवं प्रियं पुत्र मुरसि धत्ते ॥ ५० ॥

यद्वेवैत मवाहरन्ति । यान्वै तान्त्सप्त पुरुषानेकं पुरुष मकुर्व्वंस्तय मेव स यो ऽय मग्निश्चीयते ऽथ या मेषां ता मूर्द्धाए श्रियए रसए समुदौहन्नेष स य मेत मवाग्नि माहरन्ति तद्यदेत मवाहरन्ति येवैतेषाए सप्तानां पुरुषाणाए श्रीर्यो रसस्त मेत-

---

* 'मात्स्यत्'—इति ग, 'मात्स्यत्'—इति घ।

† 'भवति'—इति क।

देवैरेव सम्पादितं तस्मात्सरितार्थत्वादेतत् कर्म यद्यपि न करणीयं—तथापि यदेतत् कर्म करोमीति तदेवा यद्- कुर्वन् करवाणीति धिया क्रियते न तु रक्षसामपहननार्थं तस्य तु देवैरेव सम्पादितत्वात् ।किञ्च स्वय मपि चैतेन इन्द्रेण बृहस्पतिना च दक्षिणभागस्थितान्नायकानसुरान् रक्षांसि चापहत्या नाष्ट्रेऽभये देशे एनं यज्ञं कृतवान् भवतीति। ननु देवाः पूर्वं इन्द्रबृहस्पतिभ्यां रक्षांस्यघ्नन्निति तदस्तु प्रकृते क इन्द्रः को वा बृहस्पतिः कथं वा ताभ्यां रक्षसा मपहननं यत उक्त मुपपद्यत-इत्याह ॥ ४ ॥

"स यः स इति । पूर्वं दक्षिणभागे रक्षांस्यपहतानिन्द्रः परा- सृज्यते । स य इन्द्रोऽस्ति स एव अप्रतिरथस्त्व इत्यर्थः ॥ ५ ॥

अप्रतिरथ मेवेन्द्रात्मकत्वमुपपादयति — "आशुः शिशान* इति । (मन्त्रप्रतिपाद्याया देवताया मन्त्रस्य वा भेदात् आशुः शिशान इत्यादिका ऐन्द्रं ऋग्भिरूपा सद्दृशा भवन्तीति इन्द्रत्वेन स्वीकर्त्तुं मुचिता भवन्तीति अर्थः । अप्रतिरथसूक्त- स्थाना मृचां द्वादश सङ्ख्याया तत्स्थाग्नेः सकाशादसुरा रक्षांसि चापहन्यन्त इति प्रशंसति ।† ) "द्वादश भवन्तीति । तासां छन्दः प्रशंसति — "त्रिष्टुभि रिति । त्रिष्टुभो वज्रत्वं वज्रि- णेन्द्रेण सहोत्पत्तेः सा चोत्पत्ति स्तैत्तिरीयके श्रूयते— "उरसो बाहुभ्यां पञ्चदशं निरमिमीत मिन्द्रो देवतान्व सृज्यतत्

---

* वा० सं० १७ ३३ ।

† वन्धनीचिह्नान्तः प्रदर्शितः पाठो नास्ति ज-पुस्तकान्तरेषु ।

प्रतिरथाख्यं सूक्तं * जपेति एवं तत्र तत्र व्यापारे तं तं 'समेष्यति' विनियुञ्ज्यादित्यर्थः । अत्र सम्प्रैष "ब्रह्मन् प्रतिरथम् जपेति' यदुक्तं तस्योपयोग मभिधातुं सुराकल्प मवतारयति ॥ १ ॥

"एतद्वा इति। एतस्मिन् काले खलु एत मग्निं चय-नाख्यं यज्ञं सएस्यमानान् करिष्यमानान् इडभावस्यादयः.(?) अतएवाग्निविहारसमीपे गच्छतो देवान् दक्षिणभागेन एका 'असुरा रक्षांसि'लेन नीडार्थप्रत्ययेन लट्-प्रत्ययः । 'न यक्ष्यध्वं' न विस्तारयध्व मिति। इत्यु मैच्छन् देवानां यज्ञं विहन्तु मिच्छन्नित्यर्थः ॥ २ ॥

अथास्तेदेवे रक्षार्कं मध्ये त्वमेव मगस्ततमो बलवत्तमय वनिष्ठय वीर्यवत्तम इति। अतस्त्वमिमानि रक्षांसि प्रति-पक्षं कुरुष्वेत्युक्ते इन्द्रेण मे ब्राह्मणो द्वितीयोऽस्त्वित्युक्ते तथैव कुर्म इति। बृहस्पतिर्ब्राह्मणस्तामिन्द्रस्य द्वितीयं मकुर्वन्; तथा कृत्वा ते देवा इन्द्रेण बृहस्पतिना च दक्षिणतो दक्षिण-भागे नागकानसुरारक्षांसि अपहत्य अभाष्टे अतएवाभये प्रदेशे एनं प्रक्रतं यज्ञ मकुर्वत ॥ ३ ॥

"तद्वा एतद्" इत्यादिकस्याय मर्थः,— देवाः पूर्वं यत् कर्माकुर्वन् एतस्मिन् कालेऽपि तदेव क्रियते खलु इद मिति। अपहननक्रियाविशेषणं इदं रक्षसां; मवहनन पूर्वं

---

* वा० सं० १७ ३३—४४।

त्रिष्टुप्छन्दः इति। अथवा वीर्यवत्त्वात्त्रिष्टुभो वक्षसं वीर्यवत उरः प्रदेशस्य निर्माणात्। अतएव श्रुतं,— त्रिष्टुप् छन्दो बृहत्साम राजन्यो मनुष्याणा मविः पशूनां यस्मात्ते वीर्यवन्तो वीर्याद्ध्यसृज्यन्तेति। ननु प्रकृतस्याग्निकर्मत्वात् तत्रैतासामैन्द्रीणा मृचा मसमवेतार्थं त्वंस्यादित्यत आह,— "ता द्वाविंशति रिति। चतुश्चत्वारिंशदक्षरा द्वादश त्रिष्टुभः सम्भूयाष्टाविंशतिपञ्चशताक्षराणि सम्पद्यन्ते चतुर्विंशत्यक्षराणां गायत्रीणां द्वाविंशतिस्तावदक्षरा भवन्ति। अतो द्वादश त्रिष्टुभो मिलित्वा द्वाविंशति गायत्र्यआग्नेय्यो * भवन्ति अग्निना सर्वोत्पन्नत्वात्। अतएव श्रूयते,— "एतद्ध तच्चित्रतविरमिमीत त अग्निर्देवता च सृज्यत् गायत्रीछन्दस इति, प्रकृतञ्च कर्माग्निसम्बन्धि भवन्ति। तत् प्रणयनात्मकत्वात्। अतस्ता ऋच ऐन्द्रोयोऽपि छन्दःसम्पत्तिद्वारा प्रकृतिकर्म समवेतार्था एवेत्यर्थः॥ ६॥

इत्थं ब्राह्मणकृतथाप्रतिरथ सूक्त † जपस्योपयोग मुक्त्वा-अग्नेह्रणमन ‡ समन्त्रकं विधत्ते— "अथैन मिति। "उदु त्वा विश्वे देवा अग्ने भरन्तु चितिभिरित्यादिना § मन्त्रेणेत्यर्थः।

---

* 'गायत्र्यस्ताश्च येय्यो (? ०गाय चत्र्याग्नेय्यो)'—इति छ, भ।

† 'ब्रह्मकृतस्याप्रतिरथसूक्त'—इति भ, 'ब्रह्मकृतस्याप्रतिरथसूक्त'—इति भ।

‡ का० श्रौ० सू० १८ ३. १८।

§ वा० सं० १७ ५३।

तस्य मन्त्रस्य ब्राह्मणं प्रागुक्त मित्याह— "तस्योक्तो बन्धु रिति ॥ ७ ॥

उद्यमनानन्तरं * अध्वर्युप्रभृतीनां चित्यं प्रति † गमनं विधत्ते ‡— "अथेति। अत्र "पञ्चदिशो दैवि § रित्यादिभिः पञ्चभि रृग्भिराग्नीध्रपर्यन्तं गच्छन्ति। अत्र ता ऋचः क्रमेण व्याचष्टे— "देवाश्चासुराश्चेत्यादिना प्राजापत्य-भूता देवाश्चासुराश्चेत्युभये दिग्विषयेस्पर्धां कृतवन्त; पश्चाद्देवासुराणां दिशो वृञ्जन्त. ततोगमस्य स्वाधिनी कृतवन्तः। सैषे पञ्चदिशो दैवीरित्यादिभिः पञ्चभि रृग्भि राग्नीध्र-पर्यन्तं गच्छन्ति। अतस्ता ऋचः क्रमेण व्याचष्टे,— "यज्ञ मवन्त्वित्यनेन तथैव यजमानोऽपि द्वेषं कुर्वतो भ्रातृव्यस्य दिशं स्वाधीनाः करोति। "दैवीरित्यनेन एनादिशो देव-सम्बन्धिनीः कुरुते। असुरेभ्य उपगमय्य दैवैः स्वाधिनी-कृतत्वाद्दैवीरित्यनेन तथैव सम्पादितवान् भवतीत्यर्थः। "यज्ञ मवन्तु दैवीत्यनेन प्रकृतस्यैव यज्ञस्यावनं विवक्षित मिति दर्शयति,— "यज्ञ मिम मिति। अमतिशब्दस्याशनेच्छार्थ इति व्याचष्टे— "अपामतिमिति। अशनायोदन्येत्यादि ‖

* 'उपयमनानन्तरम्'—इति क।

† चित्य प्रति [ आग्नीध्रपर्यन्तं ]'—इति क।

‡ का० श्रौ० सू० १८ ३ १६।

§ वा० सं० १७ ५४।

‖ "अशनायोदन्यधनायाः बुभुक्षापिपासागर्धेषु"—इति पा० सू० ७. ४ ३४।

छन्दोऽवेक्षमानाया शब्दः कव्यजन्तो निपातितः। रायस्पोष इति धने तद्विषये पोषयेति वक्तु मभिप्रेत मित्याह,— "रायस्पोष इति रायस्पोषे अधीत्यत्रापि तथैव विवक्षित मित्याह,— "रायस्पोषे अधीति यजमानस्यैव पूजकत्वात् ॥ ८ ॥

"मामहान" शब्दो यजमानपर इत्याह,— "यजमानो वा इति। अनिरुक्थानि स्तोत्रशस्त्राणि पवर्वदङ्गानि भवन्ती त्यभिरुक्थपत्र इत्याह,— "उक्थपत्र इति। यतो देवाः 'तप्त घर्मं' घर्मलक्षणं अग्निं 'परिगृह्याय यजन्त'; अत उच्यते मन्त्रे,— 'तप्तं घर्मं' इत्याह— "तप्त घर्म मिति। उत्तरवाक्य मप्येव मेव व्याचष्टे,— "ऊर्जेति। 'ऊर्जां' आज्यदधिपयःप्रभृति तद्रसेनेत्यर्थः ॥ ९ ॥

अग्निर्देवसम्बन्धित्वाद्दारयष्टत्वाज्जोपयितत्व मत्वाचाग्निरेव 'देव्यायेत्यादिनोच्यत इति। दैवायेति उत्तरवाक्यद्वयं प्रसिद्धार्थं मित्याह,— "देवश्रीरिति परिगृह्येति 'देवा देवेभ्य इत्यध्वर्यन्त' इत्येतत् पदं व्याचष्टे,— "अध्वरो वा इति। अध्वर्यन्त इति "कव्यध्वरपृतनस्यर्चिलोप इति"* अकारलोपः ॥ १० ॥

"वीतं शमित" मित्यस्य पदद्वयस्यार्थ माह,— "इष्ट स्विष्ट मिति। अध्वर्युहोतृब्रह्माणो यथास्थानं यथायथं मन्त्रं जप एव 'तुरीयो यज्ञ' इति व्याचष्टे,— "अध्वर्युः पुरस्तादिति 'याकाभिर' इत्यनयोः शब्दयोः समानाधिकरणाशङ्का निवारयति।

---

* पा० सू० ७. ४ ३९।

"ततो नो वाकायाग्निपयेति। एतस्य प्रणीयमानस्याग्नेरादित्यात्मकत्वात् ॥ ११ ॥

स एष प्रणीयमानाग्निलक्षणः सूर्यस्येव रश्मिभिर्युक्तो हरितवर्णकेशः तेजोरूपः सविता अनवच्छिन्नं पुरस्तादेतदुदयच्छति। अतो मन्त्र इम मेवार्थं माचष्टेत्याह,— "सूर्यरश्मिरिति। कृष्णः पशुजनकत्वेन 'पूषा' इति प्रशस्यः उच्यते आग्नेयेरनुज्ञायां प्रवर्तन्त इत्ययमर्थः मन्त्रभागेन विवक्षितः इत्याह,— "पशवो वा इति। 'प्रेरत' इति ईरगता* इत्यस्यादादिकस्य लिटि बहुवचने रूपम्। अग्नेः प्रजापत्यात्मकत्वेन सर्वस्यापि द्रष्टृत्वाद्रक्षितत्वाच्च तदर्थं 'सम्पश्यन्नि'त्यादि मन्त्रभागः समवेतार्थ मित्याह,— "सम्पश्यन्निति। देवा दीव्यन्त देवसम्बन्धिन्यः पञ्चदिशः, अमतिं अमननेच्छां दुर्मतिं अशास्त्रीयां मतीश्चापबाधमानाः अग्ने स्वविषये पोषं च यज्ञपतिं सम्बध्निन्य एवं प्रणीयमानाग्निः लक्षणं यत्र भवतु अस्यादिति "छन्दसि लुङ् लङ् लिट"-इति लोडर्थे लुङ् प्रत्ययः† कित्त्वाय अपि यज्ञः अग्ने तत् पोषेचाधितिष्ठत्विति प्रथममन्त्रस्यायमर्थः। सम्यन्दीप्ते अग्नौ प्रणीयमाने मामहानेत्यर्थं पूजको यजमानोऽधिकारभावेनानुगच्छति। उक्थ्यान्येवाङ्गानि यस्य स उक्थपक्ष ईड्य स्तुत्यो यज्ञियो यागार्होऽग्निरध्वर्युणाधारितः किञ्च देवास्तं घर्मात्मकं तमग्नि

* "ईर गतौ कम्पने च"–अ० आ० १०१८ धा० ।

† पा० सू० ३ ४ ६ ।

परिगृह्याय यजन्त स्वामत्वादेव च यज्ञरूपं तं चाज्यादि-हविर्लक्षणेनानेनाग्नमयन्तेति द्वितीयस्यार्थः । होमसम्बन्धिनं धारयित्रोजीवयितृतमायाग्नये हविर्दानार्थं तत् प्रणयनं क्रियत इति वाक्य शेषः । किञ्च यो देवश्रीः श्रियन्त इति श्रियः देवाःश्रियो यस्य स तथोक्तः ; भक्तेभ्यः श्रियं दातुं मनो यस्येति श्रीमनाः, शतानि पयांसि यस्यासौ शतपयः, तं मग्निं परिगृह्य देवाय जनःप्रदेशं गतवन्तः । गत्वा च देवा ऋत्विग्भि र्या देवेभ्यो यज्ञ मिच्छन्तः स्थितवन्त इति तृतीयस्यार्थः । "शमिनेति तृतीयैकवचनस्य सु इत्यादेशः । स मिचा चान्यर्थं यागाय हविः वीतं इष्टं यत्र यस्मिन् प्रणयनप्रदेशे हव्यं हव-नार्थं मग्निं मध्वर्य्वादीनां मन्त्रं यथावाक् तुरीयो यज्ञो गच्छति तथाविधानात् तस्मादग्ने ऋग्यजुस्सामलक्षणानि वाक्यानि चाभि-पश्य नोऽस्माच जुपस्व मिति चतुर्थस्यार्थः । सूर्यस्य रश्मिभि-र्युक्तो हरितवर्णकेशः ज्योतिरूपः प्रणीयमानोऽग्निलक्षणः सविता चलचक्षुरेव मुदयच्छति । तस्याग्ने वनुभायां याते महिमानं विद्वान् पूषा याति ( तदुत्पाद्याः पशवः प्रवर्तन्त इत्यर्थः । किञ्च सोऽग्नि र्विश्वानि भुवनानि सम्यक्पश्यन्नेषां रक्षको भवतीति पञ्चमस्यार्थः ) ० ॥ १२ ॥

तथैवैतद्यजमानो भ्रातृव्यस्य हन्त इति सामान्येनोक्तं सम्प्रति ता एव पञ्चदिशो विशिष्य दर्शयन् तासां मुख मग्ने स्वाधीन-

---

० चन्द्रशेखिष्टान्तः प्रश्रितः पाठो नास्ति ख-पुस्तकादन्यत्र ।

तया प्राप्तिमाह— "तथा इति, तदिति। 'देवा' यस्मिन् काले 'असुराणां' दिशो वृञ्जत तस्य कालस्य परामर्शः एतच्छब्देनानन्तरोक्ता मन्त्राः परामृश्यन्ते। अहङ्कारिभ्यो य मभितवन्तः समारोहयन् स्वामिनो कृतवन्तः। "अथो इति। किञ्च देवा कं तस्मिन् काले 'एताभि' ऋग्भिः 'नाक:' सूर्यावस्थानप्रदेशलक्षणान्तरिक्षपर्यन्तं समाप्नुवन् तद्वदेवाय मपि यजमानो भ्रातृव्यतोपगमय्य स्वामिनो कृतास्ता पञ्चदिशः नाकः अन्तरिक्षात्मकाग्नेर्मण्डलपर्यन्तं सम्प्राप्नोति ॥ १३ ॥

उक्ते मन्त्रे आग्नीध्रपर्यन्तं गत्वा तत्रैकस्य पृश्निवर्णस्याश्मन उपधानं विधत्ते *— "अथेति। 'पृश्नि' शब्देन श्वैत्य † मुच्यते पृश्नेरश्मन ‡ उपधानेनादित्यस्यैवोपधानं भवतीत्याह। "असौ वा इति। आदित्यमण्डलसादृश्यप्रदर्शनेनोक्त मश्मनः पृश्नित्व मुपपादयति। पृश्नि र्भवतीति तस्य चाश्मन उपधानं गार्हपत्याहवनीययो र्मध्ये कर्त्तव्य मित्याह,— "स मन्तरेणेति। गार्हपत्याहवनीययोरधस्तनोपरितनलोकद्वयात्मकत्वाल्लोकद्वयस्य च मध्ये सूर्यस्य तपनात् सूर्यात्मकस्याश्मनस्तत्रोपधान मुपपन्न मित्याह। ( "अयं वै लोक इति। गार्हपत्याहवनीययो र्मध्यभागस्योपधान

---

* "आग्नीध्रदेशादुदीच्यं पृश्निमश्मानमुपदधाति"—इति का० श्रौ० सू० १८. ३. १६।

† "श्वैत्य०" or "चैत्य०" -इति क।

‡ "पृश्न्य०र्न तनुं हन्त पाषाणं विचित्रवर्णं वा"—इति का० श्रौ० सू० १८. ३ २०।

स्थानतया विज्ञानादाग्नीध्रादन्यथापि तदुपधानं स्यादित्यत आह ॥ १४ ॥

"आग्नीध्रवेलाया मिति। 'वेला' शब्दः अवकाश माचष्टे। गार्हपत्याहवनीययोरधस्तनो)* परितन लोकात्मकयो र्मध्यवर्त्ति-त्वयाग्नीध्रस्यान्तरिक्षात्मकत्वं व्यध्व इत्यूर्द्धमार्ग उच्यते, तत्रैतस्या-श्मन उपधानं क्रियते तस्मादितः प्रदेशादूर्द्धं † मार्गे एव सूर्य्य स्तपतीत्यर्थः ॥ १५ ॥

अथ तस्याश्मन आदित्यात्मकत्वादादित्यस्य च प्राणात्मकत्वात्तदुपधानेनात्मनि प्राणादिधारणं सम्पाद्यत इत्याह,— "स एष इति। 'स' आदित्यात्मकादित्यरूपत्वात् आदित्यस्य च प्राणत्वं तदुपाय प्राणिन चेष्टन्ते तदस्तमये तु न चेष्टन्त इति। अतएव श्रूयते— "यो सौ तपन्नुदेति। स सर्वेषां भूतानां प्राणा-नादायोदेति।०—०। असौ योऽस्तमेति। स सर्वेषां भूतानां प्राणा-नादायास्तमेति इति ‡। प्राणत्वादेव वायुरूपत्वं प्राणिना मेव जीवनकालसम्बन्धात्। "आयुर्ह्येतदिति। एषो ह्मा यतः कारणा-दायु एतदिति नपुंसकलिङ्ग मायुरित्येतदपत्यं तस्यायु रयं तद्दता-मेव भोक्तृत्वात्। अत एतदन्न' तस्मात् तदुपधानेन स्वकीय मात्मनि प्राणादीन् धारितवान् सम्भवति ॥ १६ ॥

अथ तस्योपधाने मन्त्रद्वयं प्रदर्शयद् व्याचष्टे,— "स उप-

---

* वन्धनीचिह्नान्तः प्रदर्शितः पाठो नास्ति ज-पुस्तकादन्यत्र।

† 'प्रदेशद् यद्ध्व ?'—इति क, 'प्रदेशादूर्द्धं'—इति ज।

‡ तै० आ० १. १४. १।

दधाति विमान एष *" इति। 'हि' यस्मात्कारणात् 'एष' सूर्यो-ऽभूत यामस्य निर्माता द्युलोकस्य मध्ये आस्ते, अत उक्तं,— 'विमान' इति उदयमानः सूर्यः पृथिव्यादीन् स्वप्रकाशेनापूरयतीति। त मर्थं माहेति व्याचष्टे,— "आप प्रिवानिति। 'प्रा पूरणे' †— इत्यस्माद्वर्तमानार्थस्य लिटः क्वसुरादेशः। 'विश्वाचोष्टताची पदाभ्यां विश्वेषां भूतानां ‡ च व्यापनात् वेदयः सुवश्च विश्वचस्त इत्याह,— "स विश्वाचीरिति, "पूर्वं मपर मिति। पृथिवी द्युलोकसाधोयन्ते, किञ्च 'पूर्व' मित्यनेन पूर्वं चितो गार्हपत्या उच्यते,— अपर मिति अनेने-दानीं चीयमान आहवनीय इति व्याचष्टे,— "अन्तर पूर्वं मिति ॥ १७ ॥

द्वितीय मन्त्रे,— "उक्षा समुद्रः §। (पूर्वत्वाद्योनिं" मध्ये दिवस इति पादत्रयार्थः प्रसिद्धा इत्याह। "उक्षा समुद्रो अरुण इति चतुर्थपादे रजः' शब्देनैते लोका)‖ विवक्ष्यन्त इत्याह,— "यिवक्रम इति। भूत यामस्य निर्माता द्यावा पृथिव्या अन्तरिक्षं वा समन्तात् पूरयन् एष सूर्यो द्युलोकस्य मध्ये तिष्ठति; किञ्च स सूर्यो पूर्वापरश्च केतुं लोक मन्त-

* वा० सं० १७ ५६।

† अ० आ० १०६१ धा०।

‡ विश्वेषां हविषां हता'—इति भा,

§ वा० सं० १७. ६०।

‖ बन्धनीचिह्नान्तः प्रदर्शितः पाठो नास्ति ज-पुस्तकादर्शे।

"वाजस्येति" "उद्ग्राभश्चेति" मन्त्रद्वयं * निगदव्याख्यात मित्याह,— "वाजस्य मा प्रसव इति। पञ्चदिशो दैवीरित्यादिभि र्मन्त्रै र्गार्हपत्यादाग्नीध्रपर्यन्तं गमने भ्रातृव्यसम्बन्धिनीः सूर्यादर्वाचीः। पञ्चदिशस्ततो गमय्य स्वयं प्राप्तवान् भवतीति उक्तम्,—

अथ "इन्द्रं विश्वा अवीवृधन्" इत्यादिभि र्मन्त्रैराग्नीध्रादाहवनीयं पर्यन्तं गमने सूर्यादूर्ध्वा भ्रातृव्यसम्बन्धिनीयतस्तो दिश स्तथैव प्राप्नोतीत्याह,— "तथा अमुयादित्यादिना — "आत इति द्युलोकपर्यन्त मित्यर्थः ॥ २१, २२, २३ ॥

चित्याग्नि समीपगमनानन्तर † क्रमध्व मित्यादिभिः पञ्चभि र्मन्त्रै ‡ स्तस्यारोहणं विधत्ते §— "अथाग्नि मिति। चित्याग्निरुपरिधार्यमाणे उख्याग्नौ होमविधानेन तत्र तदा वचनार्थे कस्याश्चिदपेक्षणादग्निनिधाने यजमानस्यापि निधानात् तदपेक्षा मारोहतीति मह्वचनम्। "स्वर्गो वै लोको नाक." इत्यदिनारोहणप्रकारम् व्याचष्टे— "क्रमध्व मिति ॥ तेषा मेव परोक्षाभिधानम्, 'अनेनाग्निना' चित्याग्निना 'एतम्' इत्यभिनयेन निर्देशः 'एतं स्वर्गं' क्रमध्वं अप्रतिविधं न गच्छतीत्येतदुक्तं भवतीत्यर्थः। एते क्रममाणा अध्वर्युप्रभृतयः एन मुख्याग्निं हस्तेषु बिभ्रतः धारयन्तः अतः इमा एवार्थी सम्येष प्रतिपाद्यते।

---

* वा० सं० १७. ११. ६४। † 'गमनान्तर'—इति क, ग।

‡ वा० सं० १७. ६५—६९।

§ "क्रमध्व मग्निनेति चितमारोहन्ति।"—इति का० श्रौ० सू० १८. ३. १। ‖ वा० सं० १७. ६५।

"दिवस्पृष्टं स्वर्गल्लोक मित्यनेन मन्त्रे 'स्वर्गत्वा' इत्यत्र स्वरित्यस्यार्थ उक्तः। अत्र 'दिव'-शब्देन द्युलोक उच्यते, द्युलोकस्य पृष्टं उपरितनं स्वर्गं सुखातिशयहेतुं तस्यैवस्थानविशेषां गत्वा देवैभिर्देवैर्मिश्राः संयुताः सन्तस्तिष्ठतेत्यर्थः। 'दिवस्पृष्ट' मिति षष्ठ्याः पतिपुत्रेत्यादिना विसर्जनीयस्य सकारः ॥ २४ ॥

प्राची * वै दिगग्ने रिति। प्राचीदिगग्नेः सम्बन्धिनी खलु अतएव तैत्तिरीयकं— "प्राचीदिक् अग्निर्देवता"-इति †। "अस्य त्व मिति। अस्येष्टका स्थलरूपस्याग्ने त्वं पुरोवर्त्तमानोऽग्नि मवेदं यज्ञे इत्युक्तं भवति। "दीप्यमान इति। दीप्यते इत्यस्यार्थकथनम् ॥ २५ ॥

"पृथिव्या अह † मिति। गार्हपत्यस्याग्नीध्राहवनीयानां पृथिव्यादिलोकत्रयात्मकत्वात् क्रमेण तदागमनात् पृथिव्यादिलोकत्रयं क्रमेण रूढावानस्मीत्यर्थः। 'आरुह' मिति "छन्दस्युभयथा"-इति पुरस्तादि‍‍ष्टः" ‡ "दिवो नाकस्येति। नाकस्य सुखहेतुभूतस्य द्युलोस्य 'पृष्ठात् ज्योतिर्विशिष्ट' प्रकाशमानस्वर्गं लोक 'मगामह' मित्येतदुक्तं भवति। अत्रापि पूर्ववत् सुखातिशयहेतुभूतो द्युलोक देव्यविशेषः स्वर्गशब्देनोच्यते ॥ २६ ॥

"न इवेति। ये स्वर्गल्लोके यन्ति ते फलान्तरतापेक्षन्ते खलु, अत उक्तं स्वर्यन्त ‖ इति। एष एवेति सर्वेण प्रका-

---

* वा० सं० १७ ६६।  † तै० ब्रा० ३. ११. ५ १।
‡ वा० सं० १७ ६७।  § पा० सू० ३. १. ५२।
‖ वा० सं० १७ ६८।

रेव अनद्वारयतीति। 'एष एव यज्ञो विस्ततोधारः' येन एवं यज्ञं वितन्वते एत एव सुविद्वांसः खलु विदुषा मेव यज्ञ निष्पादकत्वादित्यर्थः ॥ २७ ॥

"अग्ने प्रेहीति*। "इम मेतदिति। 'त्व मेषां' देवान् यष्टुमिच्छतां 'प्रथमः' प्रेहीति इम मुख्याग्नि माह-अग्नेजुष्टस्वर्वदुपकारत्वात्। 'इयक्षमाणा' इति व्याख्यातं यजमानं भृगुभिरितिसष्ट मन्यत्। उक्त मन्त्रपाठेन चित्याग्नेरारोहणेन स्वर्गे लोके विद्यमाना भ्रातृव्यसम्बन्धिनीः पश्चदिशः पूर्वतः प्राप्तवान् भवतीत्याह ॥ २८ ॥

"तथा अमुर्ष्मिल्लोक इति। अत्रापि 'प्रातः' इति द्युलोकादुपरितन स्वर्गावधित्वेनोच्यते ॥ २८ ॥

चित्याग्निसमारोहणानन्तर मग्निचुत्यमी होमं विधत्ते। "अथेति। अभि जुहोति अभिहोमेनेप्सित मत्वादेन मिति कर्मणि द्वितीया विहिता। आहुतिरियं प्राप्तस्याग्ने रुपरिष्टादग्ने सम्भाव्यत इत्याह— "एतद्वा इति। विहिते होमे द्रव्यं विधत्ते— "कृष्णायै श्वेतवत्सायै पयसा" † इति, उक्तलक्षणाया गोः पयस उपादाने कारण माह— "रात्रि र्वा इति। रात्रि खलु कृष्णाश्वेतवत्सास्यारात्रेरसावादित्यो वत्सः यथा गोः समीपे वर्तते तद्वदस्य रात्रिसमीपे वर्तमानत्वात्। अथ मैत्रायणीसंहितायामपि श्रूयते— "अनियादित्यस्रात्रेर्वत्सयेति आदित्य"-इति। एवचास्यामेवादित्यात्मकत्वात् तथाविधाया गोः पयसा होमे स्वर्गोकप्राप्तिन तदेव विधियते,— "स्वेन

* वा० सं० १७ ६५। † का० श्रौ० सू० १८. ४. ९।

रसेनेति। तत्र प्रीणितवान् भवति, प्रीणयितस्यादित्यात्मकस्याग्नेरूपा एव वर्त्तमानत्वेनोपधार्यमाण स एवोख्याग्नौ जुहुयादित्याह,— "उपरीति। प्रकृतहोमे साधारणं जुहः प्राप्नोतीति तदपवादत्वेनदोहनं विधत्ते— "दोहनेनेति। दोहनेन हि पयः प्रदीयत इति दोहनाक्षरं पक्षान्तरे दोहनेने खलु पयः प्रदीयत इत्यर्थः ॥ २० ॥

प्रकृत मेवातिहोमं प्रकारान्तरेण प्रशंसति— "यद्वेवेति। अग्नेः शिरोवत् प्राधान्यात् सच्छिरसं पयसः प्राणत्वं तत् पुष्टिहेतुत्वात्। "यथा स्वयमातृण्णा मिति। होमावसरे स्वयमातृण्णाया उपरि किञ्चिद्यथा 'प्रक्षरेत्' तथा होमं कुर्यात्; एवञ्च स्वयमातृण्णायाः प्राणत्वात्। अग्नेस्तु शिरस्त्वात् प्राणश्च शिरश्चेत्युभे अपि ययो तद्रूपेन रसेन सन्तनोति तदेव विशृणोति 'सन्दधाति' परस्परसम्बन्धं करोतीत्यर्थः। प्रकृतहोमो मन्त्रौ दर्शयन् तत्र प्रथममन्त्रस्यत्राह्मण षष्टकाण्डे प्रागेवाभिहित मित्याह— "नक्तोषासेति ॥ २१ ॥

---

* वा० सं० १७ ७०।

"स्वयमातृण्णा मध्यग्निं धारयन् शुक्लवत्सा पयसाभिजुहोति कृष्णाया दोहनेन स्वयमातृण्णा मवसिञ्चन्नक्तोषासेति। स्वयमातृण्णाया उपरि धारयन्नग्निम् कृष्णायाः गोः शुक्लवत्सायाः पयसा दोहनेनाभिजुहोति स्वयमातृण्णा मवसिञ्चन्। स्वयमातृण्णाया उपरि प्रतिप्रस्थाता स निधाग्निं धारयन् स्रुवस्थेन पात्रेण जुहूस्थानीयेन जुहोति।"
—इति का० श्रौ० सू० १८ ४ २२।

द्वितीयं मन्त्रं व्याचष्टे— "अग्नेः सहस्राक्षेति * हिरण्यशकलैर्वा इति। प्रकृष्टोऽग्निः प्रोक्षणे विनियुक्तैः † सहस्रसङ्ख्याकैः ‡ हिरण्यशकलैः सहस्राक्षः खलु, अतश्च मन्त्रे तथा सम्बोध्यत इत्यर्थः। प्रकाशकत्वसाधारण्येन हिरण्यशकलाना मक्षित्वोपचारः। "यद्वद्रः शतशीर्षेति। प्रजापतिशब्देनोचितेष्वङ्गेषु अन्तर्वर्त्तमानेन अग्नौ प्रतिष्ठितेषु तेषु स एव शतशीर्षो रुद्रः समभूदिति काण्डस्यादावुक्तम्। अतोऽत्राह: अ-शब्देन सकालः परामृश्यते अतोऽस्मिन् काले "शतशीर्षाऽरुद्रो सृज्यतेति। यत्र अत उक्तं मन्त्रे शतमूर्धन्निती त्यर्थः, यः शतशीर्षा भवति तस्य शतसङ्ख्याकाः प्राणाः सहस्रसङ्ख्याकाः व्यानाश्च भवन्ति। शतं सहस्र मित्यपरिमित नामधेयम्। तस्मादुच्यते,—" शतं त इति। त्वं सर्वस्मै इति। 'सहस्र' मित्यपरिमित सङ्ख्यावचनात् सहस्रस्येत्यनेनापरिमित सङ्ख्यावत इत्यस्यार्थस्याभिधानात् सर्वस्या इत्येतदुक्तं भवति। सहस्रेति लिङ्गव्यत्ययः "अधीगर्थदयेशाङ्कर्मणि"§-इति षष्ठी प्राप्तौ षष्ठ्यर्थे चतुर्थी वक्तव्येति। 'सर्वस्मै राय इति चतुर्थी। "एष वै वाज इति। 'वाज'-शब्दोऽन्नवाची तद्धेतुत्वादेषो ऽग्निर्वाजः खलु अतस्तस्मै विधेम वाजाय स्वाहेत्यनेन तमग्निं प्रीणाति। हे सहस्राक्षः शतमूर्द्ध अग्ने! ते शतसङ्ख्याकाः

* 'वा० सं० १७. ७१।
† इहैव पुरस्तात् का० ८. ७४. ७।
‡ 'सहस्राक्षैः'—इति क ख, ग।
§ पा० सू० २. ३. ५२।

माणाः सहस्रसङ्ख्याकाः व्यानाय भवन्ति ; त्वं सर्वस्य धनस्य 'ईशिषे' ईश्वरो भवति ; तस्मै अग्निरूपत्वे तदात्मकाय ते वयं परिचरेम । इदं हवि स्ते स्वाहुत मस्तु इति मन्त्रार्थः ॥ ३२ ॥

मन्त्रगतेन वित्तेन सकलस्याग्नेरभि होमः सम्पद्यत इति प्रशंसति ,— "द्वाभ्या मिति ॥ ३३ ॥

अग्नि होमानन्तर मुख्याग्नेयितीनां मुपरि निधानं विधत्ते— "अथैन मिति । निधानमन्त्रे "सुपर्णोऽसि * गरुत्मान् †" इत्यस्योपयोग माह । यतद्वा' इत्यादिना लोके हि योनौ सिक्तं प्रजननं समर्थं रेतो विक्रियते अवयवविभागवत् क्रियते । अतोऽत्रापि योनिरूपाया मुखाया संस्कृतस्याग्ने रेतःस्थस्यापि विकृत्या भवितव्य मिति । पूर्वं विकृत्या विकृतिसाधनभूतेन मन्त्रेण "सुपर्णोऽसि गरुत्मान्" इत्यादिकेन सुपर्णं गरुत्मन्तं कृत्वा विकृतवान् ‡ । तथा चयनकालेऽपि 'सुपर्णं गरुत्मन्त' एव कृत्वा विकृतवान् ; सम्प्रति 'सुपर्णोऽसि गरुत्मान्' इत्यादिकेन 'सुपर्णं गरुत्मन्त'' कृत्वा निहितवान् भवति । चीयमानस्याग्नेः पक्षाकारेण चयनात् 'सुपर्णोऽसि गरुत्मान्' इत्युक्तम् । 'गरुत्मान्' प्रशस्तपक्षत्वात् , अतएव 'सुपर्णं' पर्ण-शब्देन

---

* "तस्या मधि निदधाति सुपर्णोऽसीति वषट्कारेण स्वयमातृणायां सुपर्णोऽसीति मन्त्रेण वषट्कारेण चाग्निं स्थापयतीत्यर्थः ।"
—इति का० श्रौ० सू० १८ ४ ५ ६ ।

† वा० सं० १७ ७२ ।

‡ "वित्तवान्"—इति भ ।

पतन सुपर्ण शोभनपतनविशिष्ट इत्यर्थः। "एवं ह्येष इति। (एष अग्निरेव सुपर्णप्रकार मेतत् सर्वं करोति यतः अत उक्तं मध्ये पृथिव्याः सीदेत्यादीत्यर्थः ॥ १४ ॥

द्वितीयं मन्त्रं व्याचष्टे— "आजुह्वान इति।) * 'सुप्रतीकः' शोभनावयवः तत्र नितराम् प्रति न अपि तु भक्तान् मन्त्रो वेति व्याचष्टे— "स सु प्रतीक इति। अस्योत्याग्ने रेव चित्याग्निः स्वसम्बन्धिस्थानम्। अतोऽग्नेः 'स्वो योनि' मित्यादिना चित्याग्निं साध्वाधितिष्ठसे तदुक्तं भवतीति व्याचष्टे— "अग्ने त्वामिति अस्मामिति प्रथमान्तरिक्षाभ्या मुपरिवर्त्तमानत्वेन द्युलोकात्मकत्वात् 'अस्मिन्' चित्याग्निरूपे द्युलोके 'अध्यासीद इत्यर्थः। विश्वेदेवा इत्यनेन 'विश्वेदेवैः सह' त्वं यजमानं मन्त्रं सादितवान् भवति हे अग्ने! त्वम् गरुत्मान् अतएवं शोभनपतनोऽसि, तादृश त्वं पृथिव्यां पृष्ठे उपविश्यस्व दीयाभासो अन्तरिक्ष मापूरय ज्योतिषा दिवं दृढां कुरु तेजसा दिशोऽपि दृढो कुर्विति प्रथमस्यार्थः। भाः ज्योति स्तेज इति प्रकाशविशेषाः। हे अग्ने! त्वं पूर्वस्यां दिशि आह्वयमानोऽस्माक शोभनावयवो भूयाः, अत स्वां योनिं चित्याग्निं साध्वक्रियया अधितिष्ठ साधुयेति तृतीयैकवचनस्य सुपां सुलुगित्यादिना यादेशः। अस्मिन् चित्याग्निरूपे उत्तरे सधस्थेषु लोको अध्यासीद, हे विश्वेदेवाः! यूयं यजमानश्च

---

* मन्त्रनीचिह्नान्तः पाठो नास्ति भ-भ-पुस्तकयोरन्यत्र।

